


# मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु, (आ. प्र.) भारतम्

संपुटः ९ | 15 MAY 1971 | क्रमांकः ५



★



★

विरोधिकृद्वैशाखांकः] शकः १८९३ [मूल्यम् ४० पैसाः

# विषयसूची










# अग्निपर्वतः

अग्निपर्वतो धूमायते अग्निपर्वतः परिकम्पते ॥
बंग्लादेशे भैरवमूर्तिः सिंहलेषु नृसिंहस्फूर्तिः
वियत्नामे विनूतव्याप्तिः ईजिप्टे च विचित्रोद्दीप्तिः ।
कोरियायां कुटिलाक्षिप्तिः त्रिविष्टपे निविष्टबहुसुप्तिः
भारते निगूढतराप्तिः पाके नैकविधप्राप्तिः । ॥ अग्नि ॥

जातिः कुत्रचिन्नीतिः कुत्रचित्
भीतिः कुत्रचि दनुभूतिः कुत्रचित् ।
भाषा कुत्रचि न्मानीषा च कुत्रचित्
विघटयति जनान् परस्परं विवशयति हन्तुं परस्परम् ॥ अग्नि ॥

भारतं परिचालयति पाकिस्थानं च प्रस्फोटयति
चैनां पातयति परितापे रषियां च संशयडोलायाम् ।
अम्मेरिकां च हन्त जडतायां ब्रिटनं च भीत्याम्
अहो अग्निपर्वतः कुत्र वाऽग्निद्रवमुद्गमिष्यति ? ॥ अग्नि ॥

आकाशे सतेजाः पाताले च महौजाः
भूमौ च नितरां भीमः खण्डेषु च प्रचण्डः ।
हृदयदरीषु ध्मायमानः प्रकिरन्नग्निद्रवम्
किं वा करिष्यति ब्रह्मांडमेवाऽय मग्निपर्वतः ॥ ॥ अग्नि ॥

अणुस्प्तेटातनुप्रसारः विहंगमप्रबलनर्दनः
क्षेपणीदुग्विक्षेपणः विविधविषबंभरभीषणः ।
रोदसीपरस्परप्रताडनमेदुरतेजोविभूषणः,
अनुक्षणं सन्नह्यति अयमग्निपर्वतस्स्वयम् ॥ ॥ अग्नि ॥

# सम्पादकीयम्

## प्रजाप्रभुत्वस्य भावनामात्ररम्यता



प्रजाप्रभुत्वस्य सुखस्वप्नाः भावनामात्ररमणीयाः मृगतृष्णाव- दूरतो रम्याः जन्तुफलवद्बहिर्मनोहराः अनुभूयन्ते। अत्र न कोपि स्थिरतरो न्यायः दृढतरः पन्थाः अप्रकम्प्यं विधानं वाऽनुभूयते। प्रपंचे प्रतिभाशालिनो विरला तदन्ये च बहुला इति अनुभवसिद्धोयम् विषयः। प्रजासामान्यमतेन पदमारूढानां अधीने च पालनयन्त्रे न तावन्मात्रेण प्रजासामान्यस्य सुकुशलम् सिद्ध्यति। यद्यपि एकसहस्रस्य ओटानां आधिक्येन कोपि विजयी भवेत् तथापि तद्विरुद्धतया सम्मतिदातारोपि सहस्रशस्संतीति न तिरोहितम्। तथा च आत्मविरुद्धतया उत्तीर्णस्य तस्य पालने तेषां किं वा सुखम् भवेत् ? प्रायशो ग्रामेषु अद्याप्यनुभूयते स्वविरुद्धतया सम्मतिदातॄन् बहुशो हिंसति जेतारः इति। एकसम्मत्या- धिक्येपि तस्य जयं उद्घुष्यते। स च प्रजार्धस्य व्यतिरेकयेव खलु। कथं वा तत्पालनं प्रजापालनम् भवेत् ? विरुद्धाश्च प्रजाः पीडयत्येव सः, अथवा ताः तं पातयितुमेव समयम् निरीक्षेरन्। एवम् पालितपालकयोः संकुलसंघर्षे इदं पालनम् कियद्रमणीयम् भवेत् ?

एवम् सम्मतिसंपादने अधिकसंख्यायाः प्राधान्यम् अधिकारा- क्रमणे चाधिकसंख्यायाः प्राबल्यम् स्वीकुर्वन्त एव निर्णीतस्थानानां (रिजर्वुड्सीटस्) परिकल्पनमपि अनुमोदन्ते इति महद्विचित्रम्।

एकतो जातिनिर्मूलनप्रयत्नाः अपरतो जातिसंरक्षणदुर्गनिर्माणम् चेति महद्विरुद्धम् ।

अस्तु वा एतत्सर्वं । काश्चन प्रजाः आत्मनः विद्यमानायाः स्थितेः संरक्षणमभिवांछन्ति काश्चन तद्भञ्जनम् । काश्चन विद्यामभिलषन्ति विद्वांसश्च उद्योगं, अपराश्च विद्यां निराकुर्वन्ति अपितु तत्फलं वांछन्ति । अशठित्वैव योग्यतापत्राण्यादित्सन्ति । उद्योगिनः वस्तूनां मूल्यम् ह्रासयितुं याचन्ते, वस्तूत्पादकाश्च मूल्यमभिवर्धयितुम् । यांत्रागादिकाश्च कर्मसौष्ठव मभिवांछन्ति कार्मिकाश्च वेतनाधिक्यम् । वणिजः कराभावं कांक्षन्ते पालकाश्च बहुकरम् । ऋणदातारो वृद्ध्यतिशयं कामयन्ते आदातारश्च नीवीतः ऋणनिराकरणम् ।

एतास्सर्वा अपि प्रजा एव । प्रभुत्वं च सर्वान् तोषयितुं न शक्नोति । एकपक्षीयाणां आनुकूल्ये अपरेषां च प्रातिकूल्यं अर्थतस्सिद्ध्यति । अतः प्रजाप्रभुत्वव्यपदेशः मूढप्रतारणमेव ।

अपि च अद्य कांग्रेसप्रभुत्ववेलायां धर्मभूतो विषयः तदन्यप्रभुत्वदशायां अधर्म एव भविष्यति । अथवा एकप्रभुत्वकाल एव भिन्नदशासु धर्मोऽधर्मः अधर्मश्च धर्मो भवेदेव । यथा कांग्रेसपालन एव निषिद्धं मद्यं आंध्रदेशे इदानीं पानप्रसिद्धमासीत् । प्रजाश्च ता एव या पूर्वमासन् । तासां मध्ये कासांचन सौकर्यमसौकर्यं च सर्वदापि भवेदेव । अतः न कापि प्रभुता सकलजनमोदार्हा भवेत् । प्रभुपालने या स्थितिः सैव इदानीमपि अनुवर्तते । तदा एक एवासीत् प्रभुः, इदनीं तु ते बहवः ते च पर्यायगताश्च । परन्तु उत्कोचप्रदानां तद्ग्राहकाणां धनिकानां क्रूराणां भीषकाणां च सौकर्यमापतितमिदानीम् ।

बहुजनवंचकानां बहुगौरवम् प्रतारकाणां च अग्रपीठं चास्तीर्णमास्तेऽद्य ।

त्रिविधस्वातंत्र्यवार्ता दूरे वर्ततां नाम एकमपि स्वातन्त्र्यं नास्तीदानीं जनानां। कोयं कर्मचारिणां कर्मसन्यासो नाम? निष्कर्मिणां अन्नातुराणां तत्कर्मकरणपुरस्सरणे निरोधो नाम? प्रभुतायां तटस्थप्रायायां च विलंबन्त्यां प्रजाप्रतिनिधिनामधारिभिः प्रभुत्वहिंसनपरायणैः प्रभुताविक्षोभश्च नाम?

प्रजासेवादीक्षितानां एवं कुटिलबुद्ध्या असमये संकटसमये वा कर्मसन्यासदीक्षितानां, न तावन्मात्रमेव, सकलशाखाप्रोत्साहनद्वारा प्रभुत्वपीडनव्याजेन प्रजापीडनमेव संपादयतां प्रजांतर्भूतानां आत्मनोपि निकृष्टदशावत उपेक्षमाणानां चरितं धर्म इति भाष्यते, शासनेन समर्थ्यते इति किमिदं प्रजातन्त्रम्? न किं कर्मचारिभिन्नाः प्रजा वर्तन्ते? एतादृशानि च शासनानि कतीनांचित्प्रजानामभिप्रायेण बहुसम्मतिसंपादनेच्छया निरूपितानि तान्येव प्रभुताया गळकपित्थभूतानि समभिवर्तन्ते इति किमिदम् प्रजाप्रभुत्वम्?

अन्तःप्रदेशानां परिस्थिति मेव कलयन्तु। सीमाविवादाः भाषाविवादाः जलप्रणालीविवादाः करविवादाः इत्येवं रीत्या प्रवर्तमानेषु तेषु लक्षशः कोटिशश्च जना विमनायन्ते। आन्ध्रद्रविडसीमाकलहः बंगालभाषाभेदवादः, महीशूरमद्रांध्रप्रान्तनदीजलविवादः बहुत्र यातायातजनयाननिर्बन्धाश्च तदुदाहरणम्।

बंगालदेशे प्रजासम्मत्यतिगतमारणकांडश्च प्रजातन्त्रनाम्नैव प्रचलतीति अनुभूयतेऽस्माभिः। प्रपंचश्च तादृशं मारणहोमम् नेत्रे निमील्य पश्यत्यनुमोदत इति च महच्चित्रम्।

अतः प्रजातन्त्रम् प्रजाप्रध्वंसकमेव परिणमतीति प्रतिभाति॥

# पदार्थविज्ञानसारः

( पूर्वानुबन्धः )

शिष्यः - हे महाशय, त्वं हि सिंहव्याघ्रचित्रकतरक्ष्वादीनां विषये किमपि-नोक्तवान् । ते च किमेतद्वर्गीया भवन्ति ?

गुरुः - सिंहो व्याघ्रः एतद्द्वयम् बिडालविशेषम् वक्तुमर्हति । चित्रकस्तरक्षुश्चेति द्वयम् कुक्कुरविशेषम् वक्तुमर्हति ।

शिष्यः- चतुर्थवर्गनिर्णयः केन भवति ? तन्मध्ये वा कतिविधा जन्तवः ?

गुरुः - एषां दशनपङ्क्तिद्वयसम्मुखे द्वौ द्वौ तीक्ष्णदशनौ विद्येतेऽत एतद्वर्गीया भवन्ति । एतस्मिन् वर्गे जलमार्जारमूषिकदारुबिडालशशकप्रभृतयो ज्ञातव्याः ।

शिष्यः - पञ्चमवर्गीयास्तु के के जन्तवः ?

गुरुः - ये वै द्विशफा जन्तवः त एवैतस्मिन् वर्गे गणिता भवन्ति । यथा हि गोमेषच्छागकृष्णसारोष्ट्रप्रभृतयः । एतद्वर्गस्यासाधारणचिह्नं तु दशनोर्ध्वपङ्क्त्याः सम्मुखे दशनाभावः, किं त्वधःपङ्क्त्याश्चाष्टौ दन्ताः । एवं च भोजनकाले प्रथममुदरस्थमकृत्वा गलकम्बलस्थं गिलितम् वस्तूद्गिरणपूर्वकम् विश्रामकाले चर्वयन्ति ।

शिष्यः- एतेषां पशूनां खुरः किं द्विखण्डो न ?

गुरुः- द्विखण्ड इति सत्यं । स्वभावतस्तेऽहिंस्राः । परन्तु यदि कश्चित्ताडयति तर्हि कठिनश्रृंगेण मूर्ध्ना हिंसायै प्रवर्तन्ते । तेषां ग्रीवासिराः नितरां दृढा वर्तन्ते ।

शिष्यः- षष्ठवर्गीयाः कति विधा जन्तवः। तेषां वा किमस्ति विशेषचिह्नम् ?

गुरुः- षष्ठवर्गे चत्वारो गणाः। ते च घोटकः सिन्धुघोटकः पुण्ड्रसूकरः सूकरश्चेति चत्वारः एतेषां चतुर्णां दन्तपङ्क्तिद्वये द्व्यधिकादन्ताः शृंगविहीनाश्च।

शिष्यः- सप्तमवर्गीयाणां किमस्ति विशेषचिह्नम् ?

गुरुः- सप्तमवर्गीयाणा मेतद्विशेषचिह्नम, यत्तेषां चरणम् नास्तीति। एतस्मिन् वर्गे तिमिशिशुकादयो जलचराः।

शिष्यः- किमेते मत्स्या न ?

गुरुः- एते जलमध्ये वसन्ति। अतो बाह्ये मत्स्यवत् प्रतिभान्ति। अभ्यन्तरे च चतुष्पादपशुवद्वर्तन्ते। ते च फुष्फुषेण निश्वासप्रश्वासौ त्यजन्ति। एवम स्वकीयस्तन्यदुग्धेन स्वशिशून् पुष्यन्ति।

शिष्यः- हे महाशय, यद्यनुग्रहम विधाय तिमिमत्स्यविषये किंचित् कथयसि तदा मे महानाह्लादो जायेत।

गुरुः- तिमिरतिबृहत् दैर्घ्ये च द्विपश्चाशद्धस्तमितो वर्धते। एव मेतादृग्बलवान्, पुच्छास्फालनेन नौकां नाशयितु मर्हतीति। पुच्छेनैव जले भ्रमति। तिमिगणस्तु दक्षिणोत्तरकेन्द्रीयसागरसमीपे निवसति। तेषां हि गमनकाले जलगतेदृशी धारा यया बृहन्नौकाजीविभिस्तत् स्थानं निर्णेतु शक्यते। तेषां मुखम् त्वतिबृहत्। किंतु गलच्छिद्रमतिक्षुद्रं। दन्तोर्ध्वपङ्क्तौ दन्तो नास्ति। अस्ति च दन्तोद्भवस्थाने बृहदस्थि। तदस्थि च गजदशनवत् मूल्यवत्।

यदा ते निजमुखं व्यादाय वेगेन चलन्ति तदा विविधक्षुद्र-मीनास्तेषां मुखे पतन्ति। ततस्ते मुखम् संकुच्य तान् मत्स्यान् गिलन्ति। तेषामनेनैवाहारो भवति। ते च फुप्फुषेण वायुं गृह्णन्ति। एतस्मादेव जले चोन्मज्ज्य चिरं नावतिष्ठन्ते। एकस्मिन्दण्डे मुख-स्तुल्य द्विवारमुत्तिष्ठन्ति। तस्मिन्नेव समये तावदुदरस्थजलम् ग्रीवास्थच्छिद्रेण बहिर्निक्षिपन्ति। तदा प्रायो झंझामारुतवत् शब्दायन्ते। एष तिमिरतिकोमलो मत्स्यः, अतः कारणात् क्षुद्रा अपि मीनाः कदाचित्तेषां दुःखम् जनयन्ति। यदा ते प्रसूयन्ते तदा सन्तानमेकं जनयन्ति। परस्परंसन्तानम् प्रति च तेषामीदृशं प्रेम यत्प्राणान्तेपि न तेषां विच्छेदः ?

शिष्यः- तर्हि केन प्रकारेण ते गृह्यन्ते ?

गुरुः- बृहन्नौचारिभिस्तेषां वासस्थानम् निर्णीय समीपे गम्यते। अनन्तरं रज्जुयुक्तं शूलम् निःक्षिप्यते। तेन विद्धम्सन् स हि गभीरनीरे निमज्जति। किंचित्कालानन्तरं निश्वासं त्यक्तुं पुनरप्युत्तिष्ठति। तस्मिन् क्षणे पुनः शूलेन ताड्यते। अनेनैव बहुतरशोणितनि-स्सृतौ प्राणांस्त्यक्त्वा तिमिरुन्मज्जति। अनेनैकस्मिन् वत्सरे तत्सहस्रद्वयम् धृतमासीत्।

शिष्यः- तिमितः किं प्रयोजनम् भवति ?

गुरुः- तेन च लोकानां महोपकारो भवति यस्मात्तन्मांसेन तैलविशेषो जायते। एवं तस्य दन्तस्थानजमस्थि नानाकर्मोपयोगि भवति। अत एवैकस्य तस्य मूल्यमयुतसंख्याकमुद्रा भवितु मर्हति।

शिष्यः- एतदतिरिक्तः कश्चिद साधारणजन्तुरस्ति किं ?

गुरुः- भूजलचरगणस्तावदसाधारणजन्तुरस्ति यतस्तेषां फुप्फुसोऽपरजन्तुवत् साधारणो न, यस्माच्चतुष्पादजन्तुपक्षिभ्यां सदृशो न, तथा मत्स्येनापि सदृशो न भवति। परं त्वंशत स्तदुभयवद्भवति। एतस्मादेव चतुष्पादवत् भूमौ जीवितुं शक्नोति, शक्नोति च जले-मत्स्यवत् जीवितुमिति।

शिष्यः- भूजलचरजन्तूनां कति वर्गाः सन्ति। तेषां वा किमस्ति चिह्नम् ?

गुरुः- तेषां द्वौ वर्गौ भवतः। आद्ये गमनशीलजन्तुरिति, यथा कच्छप-मेकगोधिकाकुंमीरप्रभृतयः। एतेषां चत्वारि चरणानि। कर्ण-पत्राभाववत् कर्णरन्ध्रश्च। द्वितीये सर्पगणस्तेषां चरणं नास्ति। अण्डस्तु शृङ्खलवद्ग्रथितो भवति।

---

## अथ सप्तमकथोपकथनम् पक्षिविषयकम्

शिष्यः- हे महाशय, संप्रत्यनुग्रहम् विधाय मां प्रति पक्षिजातेर्विषयान् कथयिष्यसि ? यतस्तेषां मधुरशब्देन मम महान् हर्षो जायते ?

गुरुः- यदि तं संतोषमिच्छसि तर्हि निद्रां विहायातिप्रत्यूषे त्वया समुत्थातव्यं।

शिष्यः- सुस्थभावार्थं प्रत्यूषेऽहमुत्तिष्ठामि, परन्तु केवलम् सुस्थतार्थं न, किंतु हर्षार्थमपि।

गुरुः- इच्छाम्यहम् त्वं प्रत्यहम् प्रत्यूषे उत्थानं करोषीति, यस्माद्धि ध्यानाध्ययनविवेचनासूपयुक्तोयं कालः।

# श्रीमदभिज्ञानहरिश्चंद्रीयनाटकम्

( ले० श्री नागभूषण शर्मा, कम्मम् )

नांदी

**श्रेयोमयं यदजरं संस्तुतं ब्रह्मवादिभिः ।**
**अद्वितीयम् नुमस्तत् सत् अप्रत्यक्षम् तमोपहम् ॥**

व्याख्या- श्रेयोमयमित्यादि । श्रेयोमयं कल्याणमयम् (मयट्चेति मयट्) अजरम् अकृशम् (जृष्वयोहानै इति धातुः) न कदापि जीर्येत इत्यभिप्रायः । अद्वितीयम् समानरहितम् , एकं च । अप्रत्यक्षम अतींद्रियम् इन्द्रियातीतम् किंतु सत्तामात्रमिति भावः । तमोपहम् तिमिरभंजकम् इत्यानेन दिव्यतेजोमयमिति भावः । यद्वा, तमोनाम गुणः क्रोधादिः तमपहन्ति इति वा अज्ञान-भंजकमिति यावत् "तमो दुःखेऽन्धकारे च" इति रत्नमाला । सत् श्रेष्ठम् सत्यम् , तत् तच्छब्दवाच्यम् , ब्रह्म तन्नुमः ।

## —ः काव्यार्थसूचना ः—

अप्रत्यक्षम् , तमोपहम् इत्यनेन चक्षुरादीन्द्रियाणामगोचरम् सत् सत्य-व्रतस्यराज्ञः विश्वामित्रकृतदुःखपीडाभंजकम् । अजरमित्यत्र क्रमशः कृशत्वप्राप-णाय कृतप्रयत्नस्य विश्वामित्रस्य सत्वेनाप्यजीर्णम् इति भावः । अद्वितीयम् समानरहितम् "सत्यात्मना त्वया राजन् न लोकेषु समो जनः" इति माहेश्वरस्तुति-बलादिति ज्ञातव्यम् ब्रह्मवादिभिस्संस्तुत मित्यनेन सकलतत्वार्थवेदिभिः वशिष्ठादि-ब्रम्हर्षिभिस्संस्तुतम् । श्रेयोमयम् वाराणस्याम् विश्वनाथकरुणाविशेषेण पुनस्सा-म्राज्यसुतोज्जीवनादिसत्फलतया इति तत् हरिश्चन्द्राश्रयम् सत्यम् नुमः ।

## षष्ठोंकः

(स्थलं- पाठशालाप्रांगणम् । ततः प्रविशति पुस्तकहस्तः शिष्यः सुधाकरो नाम । )

सुधाकरः- आदिष्टोऽस्मि गुरुणा कालकौशिकेन कियान्कालो द्रष्टव्य इति । (परि-क्रम्यावलोक्य च) अहो अम्बरमध्यमध्यास्ते तरणिः ।

(सविमर्श गुरुमुपेत्य)

आर्य! मध्याह्नः कालो वर्तते।

कालकौशिकः - डिंभकाः, आनीयंताम् विशालवटपलाशपलाशानि समित्कुशाश्च, यावत् पश्चिमाशान्तविभासिनि विभाकरे तावद्वः परावर्तनम्।

कश्चित् - नियुज्यतामेष पलाशाहरणाय।

(इति लोहितम् दर्शयति)

लोहितः - आर्य! नाऽहम् वृक्षारोहणक्षमः, नियुज्यतामयम् बिंदुमाधवः।

काल - (सोत्प्रासम्) अहो अभिमानिता प्राप्तावस्थान्तरस्याऽपि क्षत्रियकुमारकस्य।

(इति कपोलौ पीडयति)

लोहितः - (सास्रम्) आर्य! मा प्रहर, प्रसीद माम्।

काल - लोहित! अमूल्योऽसि महाराजस्य प्रियसूनुः, कथं वृक्षारोहणक्षमः?

(चपेटिकाम् ददाति)

लोहितः - (सांबास्मरणम् रोदिति)

काल - भो डिंभकाः, तल्पमेवास्मै रोचताम्। यूयं तु मे नियोगमशून्यं कुरुत।

शिष्यः - यथाज्ञापयन्त्यार्यपादाः।

(सर्वे निष्क्रांताः)



(ततः प्रविशति पात्रहस्ता चंद्रमती, रोदनारुणमुखेनाऽनुगच्छता लोहितेन)

चंद्रमती - वत्स! किमर्थम् रोदिषि?

लोहित - जननि! गुरुरजिज्ञपन्माणवकान् समित्कुशपलाशान्याहरतोति। तत आवोचम् नौहम् वृक्षारोहणक्षम इति।

(उद्गतकण्ठम् रोदिति)

चंद्र - (सदुःखम् पुत्रमाश्वासयति)

लोहि - स सोत्प्रासममूल्यम् मां परिभाव्य जरद्गुरुः।
क्षणात्कपोलौ कृतवान् बाढमुच्छूनशोणितौ॥

(कपोलौ दर्शयति)

चन्द्र - (अस्रं प्रमृजती) पुत्रक! भव्यरूपगुणाभ्युदयोऽपि मयि दुर्विधायां कथम् संजातः? हा धिक्, सार्वभौमकुमारस्तुकुमारो दास्ये भवति शिक्षापात्रम्।

(इति सदुःखनिश्वासमुपविष्टा)

लोहित - अंब! कः पुमान् विधिमुल्लंघयति? इति मत्पितृवाक्यमश्रौषम्।

सत्यमेवैश्वरम् तेज स्सत्ये धर्मः प्रतिष्ठितः।
सत्याधाराणि सर्वाणि नास्ति सत्यात्परं तपः॥ सत्यमेवास्मान्परिरक्षतु।

चन्द्र - (सकरुणम् शिरस्याघ्राय) वत्स, चिरायुष्मान् भूयाः।

लोहित - जननि! अनुजानीहि गमनाय। (निष्क्रमणम् नाटयति)

चन्द्र - साधय सुखी (किंचितदूरमनुसरति)

लोहि - हा जननि! (इति मातरं परिरभ्य मूर्छां नाटयति)

चन्द्र - (सभयं तमंके निधाय, पृष्ठं पाणिना परपृशंती) वत्स! लोहित! लोहित! ब्रूहि भयकारणम्।

(नेपथ्ये)

भो लोहित ! शीघ्रम् तावदस्माननुसर, नोचेत् दुर्गमेऽस्मिन्वने त्वमेकाकी भेष्यसि, अनुल्लंघनीयो गुरुनिदेशः ।

लोहित - (मातुरंकादवतीर्य सस्मितम्) अम्ब ! साधयामि ।

चन्द्र - वत्स ! कुतस्ते भीतिरीदृशी ? कथय ।

लोहित - न जाने कारणम् अन्धकारावरणस्य ।

चन्द्र - ( साश्रुनयनम् )

अर्धेन्दुचूडवपुरात्मविदां शरण्यः त्राता सताम् सकललोकमयो दयालुः ।
विश्वोद्भवस्थितिलयादिषु हेतुरेकः पायादयम् पशुपतिस्सदयम् सुत त्वाम् ॥

(इत्याशास्ते । पटोऽवरुध्यते)

(गहनारण्यम् ततः प्रविशन्ति माणवकाः)

विभाकरः - रे स्कन्द ! दूरतरमागता वयम् अलमितो गमनेन । कृत्यमादिष्टम् निर्वर्तयितुम् प्रयतामहे ।

सुधाकरः - समिधस्त्वमपचिनुष्व ।

जातवेदाः - किं बिन्दुमाधवो दर्भापचयनमंगीकरोति ?

बिन्दु - नाऽहमंगीकरोमि लोहितम् प्रेषय ।

सुधा - मूर्ख ! स कासारतटे स्थातुंनशक्नोति लोहितः ।

बिन्दु - ननु क्षत्रियपोतः ?

सुधा - ( सदयम् ) ननु सुकुमारो बालकः ?

बिन्दु - तर्हि स किं नु करोति ?

सुधा - लोहित ! यावत्समित्कुशाहरणमस्माकम्, तावत् पलाशापचयनम् ते ।

लोहितः - स्थाने ।

( सर्वे परिक्रामन्ति )

( क्रमशः )

# आंग्लवर्णाङ्कित गणेशस्तोत्रम्

( ले० विद्वान् बालगणपतिः, श्रीरङ्गपत्तनम् )

एकदन्तम् नमामीशम्
बिलेशयविभूषणम्
सिद्धिबुद्धिप्रदातारम्
डिम्भरूपं गणेश्वरम् ॥ ॥ १ ॥

इभवक्त्रं सुराराध्यम्
एकाकृत्यंकुशम् विभुम्
जितेन्द्रियम् महादेवम्
यच्चापीष्टप्रदायकम् ॥ ॥ २ ॥

ऐश्वर्यस्य प्रदातारम्
जेतारं गणनायकम्
केयूरकुण्डलधरम्
वन्दे नित्यमुमासुतम् ॥ ॥ ३ ॥

यल्लोकनेन विघ्नौघाः
दूराद्धावंति सत्वरम्
यमामनंति मुनयः
यन्नमन्ति गणाधिपम् ॥ ॥ ४ ॥

ओजस्विनं महाकायम्
पिनाकधरसंभवम्
क्यूबादिदेशविख्यातम्
आराधकसुखप्रदम् ॥ ॥ ५ ॥

यस्यपूजा विधातव्या
कार्यारंभेषु सर्वदा
टीकातीतं तु माहात्म्यं
यस्य वन्दे गणेश्वरम् ॥ ॥ ६ ॥

युगहस्त समायुक्तम्
विघ्नध्वान्तनिवारकम्
डब्ल्यूचिह्नदन्ताग्रम्
यक्षादिजनसेवितम् ॥ ॥ ७ ॥

वैडूर्याभरणैः कान्तम्
जडदोषनिवारकम् ।
आंग्लवर्णसमायुक्तम्
वन्दे मत्कुलदैवतम् ॥ ॥ ८ ॥

# कीदृशी भारती भवेत् ?

( ले० धूलिपाल अर्कसोमयाजी, तिरुपति )



चतुरास्येषु या देवी चतुर्वेदस्वरा विधेः
वरीवर्ति वयं तस्यै नमोवाकं प्रशास्महे ॥
वाल्मीकि या च सीमन्ते मुक्तारूपेण भारती,
दरीधर्ति वयं तस्मै नमोवाकं प्रशास्महे ॥
ऋषिः पाराशरिर्यस्याः कालिदासादयस्यथा,
शरीराभरणायन्ते तस्यै देव्यै नमो नमः ॥
हन्त ! भारतदेशोऽद्य देवी भारतभारती,
वारस्त्रीलम्पटैः पुत्रैः मातेव गलहस्तिता ॥
तिस्रो भाषा अधीयानः न क्षमः स्यात्ततः परम् ,
गैर्वाणीं पठितुं बालः इति सा गलहस्तिता ॥
त्रिभाषासूत्रमेवैतत् भारतीयैस्स्वयं कृतं,
मातृभारतभारत्याः कण्ठपाशायते बत ॥
आङ्गलेयीकविताग्रन्थाम् पठन् बालो बहूनपि,
पञ्चषानपि गैर्वाणीश्लोकान्नाध्याप्यते बत ॥
अपकारो महानेष कृतो जातेरिति ब्रुवे,
जातीयं यन्महाकाव्यवाङ्मयं तत्तिरोहितम् ॥
आस्वाद्यते यदा दिव्यं श्रीमद्रामायणं मया,
अनुशोचाम्यभाग्यांस्तान् भारतक्षितिबालकान् ॥
अनुशोचाम्यभाग्यांस्तान् यैर्विद्याध्ययनाध्वनि,
उपेक्षाविषयीभूतं यावत्संस्कृतवाङ्मयं ॥

लुप्ता वेदाश्च वेदांगाः तथा वेदशिरांसि च
लुप्ता गीर्वाणवाणी चेत् कुत्रास्ते भारतीयता ?
यत्र देशे पुरा ब्रह्मजिज्ञासा क्रियते स्म वै
तत्र देशे नरीनर्ति नास्तिकत्वं जने जने ॥
बालानां न गुरु दैवं नापि पित्रोः कथापि वा
किमिदं हन्त! दौर्भाग्यं भारतीयेषु संप्रति !
अध्याप्यन्ते नवीनासु कलाशालासु बालकाः
लक्षशः कोटिशश्चापि संस्कारोऽम्बरपुष्पति
शान्तिश्शान्तिरितीदं यत् वेदो जोघुष्यते तराम्
सा शान्तिरद्य देशेऽत्र सिकतान्तरतैलति ॥
जीविते दुःखभूयिष्ठे शान्तिशून्ये च चेतसि
आनन्दस्यन्दिनी या वै सा स्याद्देवी सरस्वती ॥
निद्राहारभयैर्युक्ते मनुजे पशुतादृते
दिव्या शक्तिः ययोद्बुद्धा सा वै देवी सरस्वती ॥
अन्नप्राणमनःकोशानुपसंक्रम्य या भवेत्
विज्ञानानन्दसंधात्री सा वै देवी सरस्वती ॥
वाल्मीकेः कालिदासस्य भवभूतेश्च या पुनः
मुखाम्भोजमधुद्धारा सा वै देवी सरस्वती ॥

सर्वो जन्तुरहो! स्वजातकवशात् देवोऽपि नीचायते
साक्षाद्राजतभूधरेऽपि निवसन् रुद्रो दरिद्रायते ।
यावद्विश्वमनुप्रविश्य विलसन् विष्णुश्च खर्वायते
देशारिष्टवशेन संप्रति महान् सूर्योऽपि चन्द्रायते ॥



अखिलवेदवेदांगोभयवेदान्तप्रज्ञामानसराजहंसानां जगदाचार्यसिंहासनाधीशानां श्रीकांचीपुराभिजनानां प्रतिवादिभयङ्कराभिधानां प्राचार्याणाम् अण्णङ्करा-चार्यवर्याणां शताभिषेकमहोत्सवे तेषां महाभागानां चरणनलिनयोः अम्बत्तूरु वेङ्कटपुरस्थ स्कन्दगानविद्यालयाध्यक्ष्येण पैङ्गानाडु राजगोपालार्येण सप्रणामं समर्पिता

# सभाजनपुष्पमाला

अण्णङ्गराचार्यवरप्रसङ्गं श्रुत्वा मदीयो मधुरः कथं स्यात् ।
तथापि तद्भक्तिभवप्रमोदो मां वाचयत्यादरणार्हभावे ॥

वक्ष्ये कथं दुर्वचमोदमर्हन्ती वा नु किं स्याद्रसनप्रकाण्डा ।
चापल्यमेतद्विदुषां क्षमार्हं न युक्त ईदृक्शुकर्मरोषः ॥

रसाच्चेत्कृष्टगाथां श्रवणसुखदां श्लाघ्यगुण्यप्रणालीं
सभामध्ये प्रदीप्ये विपुलमतिदे पादपद्मे गुरूणाम् ।
सुगीतां पद्मराजीं प्रणतिविहितां भक्तिसूत्रप्रबद्धाम्
समेदं चार्पयिष्ये सहृदयरुचिं रस्यनां भावविद्भिः ॥

कीर्तिश्चाण्णङ्गराचार्यवरगुरुमणे पाञ्चजन्यप्रकाशा
सर्वांश्चाह्लादयन्ती सुमधुरवचनोज्जृम्भमाणाप्रमाणा ।
गौरा निर्दोषगुण्या स्फटिकमणिनिभा भासमानाऽसमाना
वाङ्माधुर्यप्रफुल्ला ज्वलति सुलमणा शारदा चन्द्रिकेव ॥

आळ्वारवाक्योद्भवतत्त्वलीलं कस्तूरिकागन्धसमानशीलम् ।
दिष्ट्याभिनन्दामि हयास्यभक्तं पद्मस्रजा तं ह्यनया सुधीरम् ॥

काञ्चीनगर्यां सुविलासवत्यां विद्याविमर्शालयगोचरायाम् ।
दिव्यप्रबन्धाकलनोपदेशे चाध्यक्षपीठाभरणायमानम् ॥

ज्ञानप्रदीपं हरिदासवर्यं निर्वीचिनीराशयवत् प्रशान्तम् ।
लक्ष्यं च तल्लक्षणमेव निश्शङ्कं बोधयन्तं निजशिष्यवर्गान् ॥

आचार्यसूक्तिप्रविमर्शधीरं शास्त्रैकनिष्ठं प्रतिभाविभासम् ।
श्रीदाक्षिणात्याचरणप्रमाणोन्नेतारमुत्कर्षविराजमानम् ॥

बीजांकुरन्यायपरस्परांग श्रुतिप्रबन्धान्यतरान्तरंगम् ।
विमृश्य तत्वग्रथनप्रशस्तं पारंगतं शास्त्रजलाशयस्य ॥

भावोपबृंहं गुरुभक्तसिंहं व्याख्यानसूक्तयब्धिविहारिमीनम् ।
नारायणाख्यां परमार्थदात्रीं सदा जपन्त मनुलग्नचित्तम् ॥

यद्दाक्षिणात्यप्रथसंपदायस्तल्लक्षणग्रन्थममुच्चयार्थम् ।
व्याख्यानशौण्डं परिभाषमाणं श्रीवैष्णवानुष्ठितसूक्तिजालम् ॥

बलादाकृष्यमाणः प्रवचनसुधापायनेनात्मशक्त्या
तदन्तेवासिभूता विवशहृदयाः श्रीप्रबन्धोपदेशैः ।
विनीताः प्रेमभावाश्च शरणमितास्सत्पथाचारशीलाः
शरज्ज्योत्स्नायिते तच्चरणकमले लीनचित्ता हि सर्वे ॥

रक्षति ग्रन्थनिवहान् स्वशिशुं जननी यथा ।
अपूर्वग्रन्थरत्नानां प्रकाशनधुरन्धरः ॥

विद्यार्थिनां च विदुषां विद्यया च नियोगतः ।
बहुशश्चोपकुरुते पात्राणां प्रतिभात्विषाम् ॥

सांप्रतं सोऽयमस्त्यद्धा राष्ट्रेन्द्रेण विभूषितः ।
पद्मभूषणसंज्ञेन बिरुदेनोत्तमेन हि ॥

लग्नराशिनवांशेषु तारग्रहयुयेषु च ।
ज्ञानभूषणमस्त्येव शर्मात्तविद्वदग्रणीः ॥

यद्भाषा सर्वविद्वज्जनवरनिचयो लज्जितस्सद्य एव ।
संकोचान्म्लानचित्ताः प्रवचनपुरुषाश्चाखिला यस्य नेत्रे ।
तं विद्वद्भूषणाढ्यं ज्वलितगुणमणिं चित्तशुद्धं सुधीरं
मूर्त्या कीर्त्या च गौरं मधुरतरगिरं चाभिनन्दाम्यभीक्ष्णम् ॥

समागच्छध्वमार्या विनयधनसम्पन्नविद्वद्वरेण्याः
रहस्यज्ञं श्रयध्वं प्रणमत गुरुं तस्य गाथां शृणुध्वम् ।
कलाविद्वन्मनोज्ञां गुरुवरमनोहारिणीं पद्यमालां
उदञ्चत्पञ्चमः कूजति च गुहराजस्समोहं पिकोऽसौ ॥

बोभूयादण्णङ्गराचार्यसुशर्मभूमा ह्युज्ज्वलकीर्तिः ।
समेधिषीष्ट च वाग्मिनां वरो शतसंवत्सरमितिरायुष्मान् ॥

जयतु जयतु नित्यं शास्त्रमन्दारवृक्षो जयतु सुकरमेतच्छिष्यबृन्दं तदीयम् ।
जयतु रसिकलोके पद्यमालेयमद्धा विलसतु गुरुसूक्तिशिष्यवाचि प्रगाढम् ॥

इति शम्

अम्बतुरु
साधारणमीनशुक्लचतुर्दशी

पैङ्गानाडु राजगोपालार्यः

# सुलभपाठमाला ५४

## लताः ३

### चंपकलता

इयम् लता सुदीर्घा प्रवर्धते। अस्याः पत्राणि च किंचिद्वर्तुलानि एकद्व्यंगुलविशालानि भवन्ति। एतत्पुष्पाणि च कनकवर्णानि दीर्घाणि मधुपूर्णानि सुगन्धभरितानि भवन्ति। एतन्मधुपिपासवः आरुणपिपीलिकाः पुष्पकेसरकर्णिकां आक्रामन्ति प्रायशः। पुष्पसुगन्धश्च दूराद्दूरतरं वायुवशादानीतः जनान् रञ्जयति। केचित्खलु वदन्ति जनाः एतद्गन्धाकृष्टाः सर्पाः तत्रागच्छेयुरिति। देवपूजायै मानवालङ्काराय च इमानि पुष्पाणि महोपयुक्तानि भवन्ति।

चांपेयः चम्पकः हेमपुष्पक गन्धफलीति च एतल्लतायाः नामानि प्रथन्ते।

इदम् तु विचित्रं मधुपानरसिकः खलु मधुकरः एतत्कुसुमम् नोपसर्पतीति। एतत्स्पर्शेन मधुकरा म्रियन्त इति च तत्कारणम् व्याहरन्ति केचित्।

पण्डितराजोऽवदत् –

चरन्वनांते नवमंजरीषु न षट्पदो गन्धफलीमजिघ्रत्।
सा किं न रम्या? स च किं न रन्ता? गरीयसी केवलमीश्वरेच्छा॥

नवचूतपोतवेष्टनां कुसुमितचम्पकवल्लीं दृष्ट्वा न पारयन्ति पथिकजना तदन्यतो यातुम् स्वात्मप्रियायाः दूरतरे स्थातुम् वा।



# संस्कृतव्याप्तिः

साहित्यअकाडमी अध्यक्षः प्राचीनसारस्वतजातीयाचार्यश्च **डा. सुनीतिकुमारछटर्जी महोदयः** मद्रनगरे कुप्पुस्वामिशास्त्रि अनुसन्धानालयस्य रजतोत्सवसन्दर्भे मार्च 27 तिथौ भाषमाणः एवमवोचत् — आधुनिकभारतभाषाणामुपरि तदभिवृद्धौ आंग्लसंस्कृतभाषयोः प्रभावः अधिकोऽनुभूयते । घूर्जरे महाराष्ट्रे वंगे च संस्कृतमहाविदुषां संस्कृतानुसन्धानकर्मणि तेषां आंग्लज्ञानम् सहकार्यभवत् । तस्मात् संस्कृतज्ञानेन सहैव आंग्लज्ञानमभिवर्धनीयमिति ।

लक्नो वारणासी संस्कृतविद्यालयानां भूतपूर्वाध्यक्षः आचार्यः **के. एस. अय्यरः** स्वभाषणे "स खण्डो नास्ति योऽद्य संस्कृतपठनेन वञ्चितः" इति अवदत् ।

# संस्कृतवाग्वर्धिनी सभा,

## त्रिशिरःपुरी.

21-3-71 दिने **श्री यस. रामस्वामि आर्यस्य** आध्यक्ष्येण समावेशो संस्कृतभाषाप्रचारिणसभायाः, भारतीयविद्याभवनस्य च परीक्षासु कृतार्थानां विद्यार्थिनां कृते योग्यतापत्राणि पारितोषिकाणि च वितीर्णानि । मुदिकोंड़न् श्रीनिवासशास्त्रिणः श्रीमती लक्ष्मीजयरामनश्च संस्कृताभ्यासावश्यकतामुद्दिश्य अभाषन् ।

# शिक्षा च का यत्र न संस्कृतम् स्यात्

**ले० वैद्यः रामस्वरूपशास्त्री, मुम्बई - ७७**



सर्वासामपि भाषाणां जननं जीवनं यतः ।
भासते संस्कृतं तेन शरीरस्य यथाऽसवः ॥

यस्यां मुनीनां विदितं निबद्धं
यस्यां च बद्धं गदितं श्रुतीनाम् ।
ज्ञानं च विज्ञानमयं विशेषात्
सा संस्कृता वाग्भुवि पूजिताऽस्ति ॥

गीर्वाणवाणी जगति प्रसिद्धा
दिव्या सुबोधा सरलाऽतिरम्या ।
मता कवीनामखिलोत्तमा सा
सरस्वती भारतभूसुराणाम् ॥

केचिद्विमूढाः कठिनां वदन्ति
केचिन्मृतां तां च वदन्ति रूक्षाम् ।
सा संस्कृता वाङ्न मृता न रूक्षा
गूढस्य बोधस्य च माध्यमापि ॥

आबालवृद्धाः समुपेत्य नित्यम्
शालामधीध्वं खलु देववाणीम् ।
गृहेषु कन्या गृहिणीजनाश्च
लब्ध्वा सुबोधं कृतिनो भवन्ति ॥

किं भोजनं यत्र न गव्यमस्ति
का वस्त्रता यत्र न शुभ्रतास्ति ।
का सभ्यता यत्र न नम्रता स्यात्
शिक्षा च का यत्र न संस्कृतं स्यात् ॥

---

## प्रार्थना फलतु

मद्रपुर्यां 28-3-71 तिथौ श्रीकांचीकामकोटिशङ्कराचार्य जयन्त्युत्सवसन्दर्भे संस्कृतभाषासङ्घः मद्राससर्वकारं पार्थयत यावच्छीघ्रम् द्राविडदेशे संस्कृतविश्वविद्यालयम् स्थापयितुम् विद्याप्रणाल्यां संस्कृतस्य बोधनकालमभिवर्धयितुम् च ।

# श्री लक्ष्मीनारायणक्रतुः

तिरुमलै (तिरुपति) श्री वेंकटेश्वरस्वामिसन्निधाने 1972 वत्सरे मार्चमासे प्रथमदिनादारभ्य द्वादशदिनपर्यन्तं लोककल्याणसंपादनार्थं श्रीमद्भिः त्रिदंडि श्रीमन्नारायणरामानुजजीयरस्वामिभिराचरिष्यते।

"लक्ष्मीनारायणाख्यं तु उत्तमोत्तमसंज्ञितं. सहस्रकुंडसंयुक्तं पूर्वोक्ताभ्यां च योजयेत् अष्टाक्षरं च श्रीमन्त्रं प्रत्येकं कोटिसंख्यया। द्वादशाहं तु पक्षं वा मास मेकं तु वा व्रतं। सर्वार्थसिद्धिदं लोके सर्वारिष्टविनाशकं। एतद्यज्ञविधानेन लोके दुर्भिक्षनाशनं। सुवृष्टिश्च सदा भूयाद्यावद्वर्षशतं ध्रुवम् ॥" इति प्रस्तुतोयं क्रतुः द्वादशदिनदीक्षया आचर्यते।

अत्र 1008 ऋत्विग्भिः तावद्भिः कुण्डेषु होमः, कोटिद्वयं मन्त्रराजपुरश्चरणम्, कोटिद्वयं श्रीमन्मन्त्रपुरश्चरणम्, कोटितुलस्यर्चनं, दशलक्षतर्पणम्, चतुश्शतघनपाठिभिः चतुर्वेदपारायणम्, चतुश्शताध्यापकैः चतुस्सहस्रीप्रबन्धपारायणम्, श्रीभाष्यस्य भगवद्विषयस्य श्रीरामायणस्य अष्टादशपुराणानां श्रीमद्भागवतस्य श्रीवेंकटेश्वरमाहात्म्यस्य, श्रीविष्णुसहस्रनामस्तोत्रस्य, ब्रह्मगायत्र्याश्च प्रत्येकं अष्टोत्तरशतगणितैः विद्वद्भिः पारायणम्, अष्टोत्तरशतभक्तैः अखंडं दिवारात्रं हरेरामनामसंकीर्तनं च विधास्यते।

एकदिने एककुण्डनिर्वहणाय दक्षिणार्थं 116 रूप्यकाणि, अन्नशान्त्यर्थं 116 किलोमिताः तंडुलाः, होमार्थं 16 किलोप्रमाणकं शुद्धाज्यं च समर्पणीयम्, अथवा सर्वस्य कृते 451 रूप्यकाणि। एवं रीत्या यथाशक्ति यथोत्साहं च एकैकोपि बहुदिनेभ्यः बहुकुण्डेभ्यो वा यजमानत्वं

आदातुं शक्नोति । अथवा अनेके वा संघाः ग्रामाः वा यजमानतां आदातु-मर्हन्ति ।

अन्येषामपि कैंकर्याणां विषये विभिन्नानि शुल्कानि वर्तन्ते । एतस्य विशदतया परिज्ञानाय अधस्संकेताय लेखनीयम् ।

संकेतः —

श्रीमान् त्रिदंडिश्रीमन्नारायणरामानुजजीयरस्वामी,
13, सौत उत्तर वीथी,
श्रीरङ्गम, तिरुचिरापल्ली ।

## श्री चण्डीयागः गौरीगणपत्यादिमूर्तिप्रतिष्ठा च

विद्वान् वैद्यविद्वान् कवीश्वरः सर्वतन्त्रस्वतन्त्रः विद्यानिधिः इत्यादि बिरुदभाजा श्रीमता आलकूरु गोल्लापिन्नि वासुदेव शास्त्रिणा सपत्नीकेन डा॰ गुण्टि नन्जुण्डशर्मणा च सपत्नीकेन 6-5-71 प्रभृति 10-5-71 पर्यन्तं पञ्चदिनदीक्षया अनन्तपुरमण्डलस्थे कल्याणदुर्गनगरे भवानीशङ्कर-देवालये श्री चण्डीयागपूर्विका गौरीगणपत्यादिमूर्तिप्रतिष्ठा महावैभवेन अकारि । वेदपुराणशास्त्रनिष्णातैर्बहुभिः तत्तत्पारायणम् निर्विराममाचरि-तम् । समये समये च प्रसंगाः हरिकथादयश्च संश्राविताः । असंख्याकाश्च जनाः तत्तत्कार्यान्वयदर्शनादिभिः मातृदेव्याः अनुग्रहम् अलभन्त । एतादृशैः लोककल्याणकरैः कार्यैः लोकस्य क्षेमो नियतम् भविष्यति ।



RESULTS OF MARCH EXAMINATIONS 1971

# Samskritha Bhasha Pracharini Sabha, Chittoor.

The following are the Registered Numbers of successful candidate who appeared for the Sanskrit Examinations held on 13th, 14th and 15th March 1971 by the above Sabha.

## PARICHAYA

**I Class:** 947 952 972 1017 1018 1020
1021 1040 1048 1052 1066 1068 1072 1076 1104
1127 1128 1129 1136 1138 1139 1152 1156 1177
1180 1279 1317 1318 1320 1321 1323 1337 1352
1358 1385 1386 1387 1388 1389 1390 1391 1392
1413 1415 1440 1441 1442 1468 1470 1471 1478
1507 1509 1510 1513 1515 1516 1517 1539 1541
1543 1544 1545 1546 1548 1549 1550 1551 1552
1553 1554 1560 1561 1562 1564 1565 1566 1567
1571 1572 1573 1576 1577 1579 1580 1581 1592
1639 1642 1643 1647 1656 1662 1668 1673 1690
1691 1703 1704 1705 1707 1709 1710 1711 1735
1748 1749 1752 1753 1754 1755 1756 1757 1758
1759 1764 1766 1769 1770 1771 1772 1774 1775
1776 1778 1780 1785 1786 1787 1792 1795 1797
1800 1801 1802 1803 1806 1808 1814 1815 1816
1817 1818 1819 1820 1821 1823 1824 1825 1834
1838 1839 1841 1842 1843 1844 1845 1847 1849
1853 1896 and 1897.

II Class : 854 855 856 857 859 863
864 868 869 870 871 872 875 885 886
887 888 889 890 893 894 895 906 907
908 909 910 911 922 926 928 929 933
936 942 945 948 951 964 1012 1016 1019
1022 1023 1024 1025 1026 1027 1039 1041 1042
1043 1044 1045 1046 1050 1054 1061 1062 1065
1067 1070 1071 1073 1074 1077 1105 1109 1119
1120 1121 1122 1130 1140 1143 1144 1145 1147
1149 1159 1162 1164 1166 1167 1168 1173 1174
1175 1176 1178 1233 1234 1242 1244 1243 1248
1252 1260 1274 1280 1282 1297 1307 1309 1314
1316 1319 1350 1351 1354 1355 1356 1362 1363
1365 1366 1367 1368 1374 1375 1394 1400 1401
1402 1403 1404 1405 1406 1408 1409 1411 1412
1414 1443 1444 1445 1452 1457 1458 1461 1467
1469 1474 1475 1476 1508 1511 1512 1514 1538
1542 1557 1558 1563 1568 1574 1575 1578 1590
1591 1614 1615 1619 1621 1622 1638 1641 1644
1646 1648 1657 1659 1660 1664 1665 1670 1672
1674 1675 1689 1697 1706 1708 1712 1738 1746
1747 1750 1751 1765 1773 1779 1781 1782 1783
1789 1790 1794 1796 1804 1807 1810 1811 1827
1830 1831 1833 1835 1836 and 1895.

III Class : 860 861 862 866 867 873
874 876 891 918 919 921 923 927 931

932 940 943 946 949 950 953 955 956
957 959 960 962 963 965 967 970 1013
1014 1015 1028 1029 1036 1037 1038 1047 1049
1053 1063 1064 1069 1106 1107 1131 1132 1133
1134 1135 1141 1142 1146 1148 1150 1151 1153
1154 1155 1160 1161 1163 1169 1170 1171 1172
1230 1236 1239 1247 1249 1256 1257 1258 1259
1261 1263 1264 1266 1267 1268 1271 1272 1273
1277 1281 1286 1287 1288 1289 1291 1292 1293
1294 1295 1296 1301 1308 1310 1311 1315 1335
1336 1338 1339 1357 1364 1369 1376 1377 1379
1380 1399 1407 1410 1450 1451 1453 1454 1455
1456 1459 1460 1477 1502 1503 1504 1540 1547
1555 1556 1588 1589 1612 1613 1616 1617 1620
1624 1658 1669 1671 1676 1677 1699 1702 1728
1742 1743 1744 1745 1777 1788 1798 1805 1813
1822 1826 1828 1829 1832 1837 1840 1846 1848
and 1852.

## ABHIGNA

**I Class:** 878 995 1078 1096 1097 1098 1183
1197 1340 1347 1348 1418 1462 1503 1519 1584
1593 1596 1604 1605 1606 1607 1609 1610 1718
1760 1761 1762 1763 and 1869.

**II Class:** 848 850 879 880 882 883 897
901 902 908 913 934 974 976 980 982
984 993 997 1001 1002 1030 1031 1032 1056
1080 1081 1084 1087 1123 1125 1182 1184 1185
1186 1187 1192 1193 1194 1196 1199 1200 1203
1204 1208 1327 1328 1346 1349 1370 1385 1396
1417 1419 1420 1421 1423 1424 1463 1464 1466

1472 1473 1518 1583 1587 1594 1597 1598 1599
1600 1601 1602 1608 1625 1626 1628 1629 1631
1651 1652 1679 1680 1714 1715 1716 1719 1720
1721 1722 1723 1724 1854 1857 1862 1863 1865
1866 1867 1870 1871 1875 and 1894.

III Class: 849 851 852 881 896 898 900
904 915 916 977 979 981 985 986 994
998 999 1000 1003 1033 1034 1079 1082 1083
1085 1088 1091 1092 1093 1094 1111 1113 1126
1181 1188 1195 1198 1201 1205 1206 13[illegible]3 13[illegible]4
1324 1325 1381 1398 14[illegible]2 1426 1427 1465 1505
1522 1586 1595 1603 1611 1627 1630 1681 1682
1684 1718 1767 18-5 1858 1860 1861 1864 1872
1876 and 1877.

## VICHAKSHANA

I Class: 1100 1216 1218 1341 and 1429.

II Class: 912 1059 1099 1101 1115 1116 1219
1220 1222 1428 1485 1486 1523 1525 1527 1632
1633 1878 1880 and 1882.

III Class: 1058 1108 1221 1223 1329 1330 1331
1333 1334 1446 1484 1488 1489 1524 1526 1634
1635 1636 1637 1666 1879 1883 and 1884.

## SAMARTHA

I Class: NIL.

II Class: 1344 1528 1529 1530 1532 and 1740.

III Class: 884 1342 1343 1435 1447 1448
1493 1494 1495 1496 1497 1531
and 1741.

I Part only: 1007 1009 1060 1306 1885
1887 1888 and 1893.

II Part only: 1227 1229 1533 and 1534.

## KOVIDA

I Class: NIL.

II Class: NIL.

III Class: 1358 1360 1373 1499 and 1500.

I Part only: 1439 1535 and 1536.

III Part only: 1438 only.

V Part only: 1359 1361 and 1768.

II and III Parts only: 1891 only.

I, II Parts only: 1653 only.

I, II and III Parts: 1117 only.

III, IV and V parts only: 1436 only.

III and V parts only: 1437 only.

I and V Parts only: 1889 and 1890.

The following are the names of the candidates who stood first in first class of the above examinations. Prizes will be awarded to them in due course.

**Parichaya :** No. 1825 S. Durga Bai, Salem.

**Abhigna :** No. 1610 N. Rajakumari, Madurai-B.

**Vichakshana :** No. 1100 B. Sakuntala, Cromepet.

S. B. P. SABHA,
CHITTOOR.
4—5—71

**K. Srinivasacharya,**
*Pariksha Manthry.*



## साधारणवत्सरोत्तरायणपरीक्षासु उपयुक्तानि केन्द्राणि 50



(1) अम्बत्तूरु (2) अनन्तपुरम् (3) अनकापल्ली (4) अमलापुरम् (5) इलुगाडु (6) उदकमण्डलम् (7) कडपा (8) काकिनाडा (9) कुम्भकोणम् (10) कुरुकुंदा (11) कोयम्बत्तूरु (12) कोंपेट (13) गुंतकल (14) गुण्टूरु (15) चित्तूरु (16) चिदम्बरम् (17) तञ्जावूरु (18) तिरुपति (19) तिरुपल (20) तिरुनगर (21) तिरुनल्वेलि (22) तिरुवेंगाडु (23) तिरुचेरापल्ली (24) तिरुवल्लिक्केणी (25) तेनाली (26) तेरिलंदूरु (27) त्यागरायनगर (28) दोम्मरनन्द्याला (29) नागपट्टणम् (30) नेल्लूरु (31) पेद्दापुरम् (32) भीमवरम् (33) मंत्रालयः (34) मदुरै (ए) (35) मदुरै (बि) (36) मदुरै (सी) (37) मन्नार्गुडि (38) मेट्टूरडाम (39) राजमंड्री (40) रेड्डिपल्लि अग्रहारम् (41) वरंगल् (42) विल्लुपुरम् (43) विजयवाडा (44) विजयनगरम् (45) विशाखपट्टणम् (46) शिवदेवुनिचिक्काल (47) श्रीरंगम् (48) श्रीरामापुरम् (49) सखिनेटिपल्ली (50) सेलम् ।

### साधारणोत्तरायणपरीक्षार्थिनां (1971 मार्च) सारणी

उत्तीर्णाः **844**

| परीक्षाः | अभ्यर्थिनः | उत्तीर्णा | | | |
|---|---|---|---|---|---|
| | | प. श्रे. | द्वि. श्रे. | तृ. श्रे. | खण्डशः |
| परिचयः | 650 | 162 | 210 | 169 | — |
| अभिज्ञः | 269 | 30 | 103 | 72 | — |
| विचक्षणः | 62 | 5 | 20 | 23 | — |
| समर्थः | 45 | — | 6 | 13 | 12 |
| कोविदः | 22 | — | — | 5 | 14 |
| | 1048 | 197 | 339 | 282 | 26 |

# सेलमनगरे स्नातकोत्सवः

1969 अखिलभारत शङ्करसमिति संस्कृतपरीक्षासु चित्तूरु संस्कृतभाषाप्रचारिण्यास्सभायाः 1970 वत्सरीय उत्तरायण दक्षिणायन परीक्षासु विद्याभवनपरीक्षासु च उत्तीर्णेभ्यः विद्यार्थिभ्यः 17-4-71 दिने योग्यतापत्राणि प्रदत्तानि, तैस्साकं सर्वेभ्यश्च तेभ्यः रजतपदकानि च परितोषेण वितीर्णानीति वार्तां आकर्ण्य महानानन्दोऽनुभूयते ।

तत्रत्य शङ्करमठे 27-4-71 प्रभृति त्रिदिनं शङ्करजयन्तीमहोत्सवश्च महावैभवेन निर्वर्तितः ।

---

# चित्तूरुनगरे शङ्कर रामानुज जयन्त्यौ

29-4-71 दिने श्रीरामविलास सभायां श्री गोपालार्याध्यक्ष्येण श्री शङ्करजयन्ती समारोहः, 30-4-71 दिने च श्री ति. कं. तिरुवेङ्कटाचार्यस्य च (प्रधानमन्त्री, संस्कृतभाषाप्रचारिणी सभा) आध्यक्ष्येण श्री रामानुजजयन्ती च निवर्तिते । अनयोर्दिनयोः प्रातस्सुप्रभातेनारभ्य मध्याह्ने विशिष्टपूजाविशेषैः सायम् च तत्तदाचार्यचरित्रतत्ताच्छिद्धान्त विशेषविवरणपूर्वकम् भाषणानि प्रवर्तितानि ।

# विद्वत्सु विज्ञाप्यते

——:o:——

संस्कृतभाषाप्रचारिण्याः सभायाः रजतोत्सवसन्नाहः प्रचलति । उत्सवविशेषांकश्च सम्मुद्रितप्रायः । तत्परिपूर्तिमधिगत्य उत्सवदिनादि-निर्णयः क्रियेत । मन्ये प्रायशः द्वित्रमासे स महोत्सवः निर्वर्त्येतेति ।

तत्संदर्भे नवनवरचितानां प्रकाशितानां वा संस्कृतग्रन्थानां प्रदर्शनीमपि निर्वोढुं व्यवस्यति सभा । अतः कृपया संस्कृते नव-प्रकाशिताः, अप्रकाशिताः करलिपिरूपेण वर्तमाना वा ग्रन्थाः पत्रपत्रिकाश्च (नागरी-तेलुगु-ग्रन्थ-कर्णाटकादि लिपिषु यासु कासुचिदपि वर्तन्ताम्) प्रेषयित्वा प्रदर्शिनीं सविशेषं विभूषयन्त्विति प्रार्थये ।

अपि च संस्कृतप्रचारसामग्री तत्तत्संस्थाभिरुपयोज्यमाना सापि प्रेषणीया ।

यद्यपि महान् ग्रन्थराशिः नवनिर्मिता वर्तते भारते, तथापि तत्तद्रचयितृसंकेताद्यपरिज्ञानात् प्रत्येकं प्रार्थने अशक्ता वयं एतद्विज्ञापन-द्वारा अभ्यर्थयामहे यथाशक्ति सहयोगदानाय ।

ये केचिच्च महानुभावा ग्रन्थान् प्रेषितवन्तः तेषां विषये कृतज्ञता आविष्क्रियते ।

प्रार्थयिता,

ति. कं. तिरुवेङ्कटाचार्यः,

प्रधानमन्त्री

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.
*R. N. 8145/60.* *Postal R. No. H. 493*

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् ४-००

## प्रहेलिकाः

रागी भिनत्ति निद्रां तल्पं न जहाति निष्ठुरं दशति ।
चतुरे किं प्राणेशो ? नहि नहि सखि, मत्कुणव्रातः ॥

अर्थः– रागी अनुरागवान् अरुणवर्णश्च ।

आदौ गृहीतपाणिः पश्चादारूढजघनकटिभागा ।
नखमुखलालनसुखदा रमयति रामेव मामियं पामा ॥

भावः– कण्डूयुना पामा (व्याधिः) प्रथमं हस्तांगुलीमध्ये प्रादुर्भूय जघनकटिभागमाक्रम्य कंडूयने सुखमनुभावयति ।

शस्त्रं न खलु कर्तव्यमिति पित्रा नियोजितः ।
तदेव शस्त्रं कृतवान् पितुराज्ञा न लंघिता ॥

अर्थः– नखं लुनातीति नखलु इत्येकं पदं । तदेव नखच्छेदकमेवेत्यर्थः । अतः आज्ञोल्लंघनम् न भवति ।

Published by Sri N. Ramanatha Iyer B. A; B. L., Advocate
& Secretary S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri T K Thiruvengadacharya
at Vijaya Press, Chittoor (A. P.)--C 1500